## ३९—हृदयालम्भः ।

पादसेवनम्, हृदयालम्भनम्, स्वदोषकथनम् सन्देहनिवारणम् आत्मसमर्पणं चेति न्यासधारणायाः पञ्चाङ्गानि सन्ति । एतानि पञ्चकोषान् शोधयन्ति । अन्नमयकोषमलिनकारिप्रभावो मलशब्देनोच्यते । स च गुरुपादसेवनेन ह्रसते । प्राणमयकोषदूषको विकारो व्याख्यातः ! स तु गुरुकृतेन हृदयालम्भनेन प्रणश्यति । मनोमयकोष-मलिनकारी विक्षेप इत्युच्यते; सोऽपि मनश्चाञ्चल्यविधायी गुरुसन्निधाने निष्कपटं स्वदोषकथनेन निवर्त्तते, तेन योगसाधनशक्तिः प्रवर्द्धते । विज्ञानमयकोषमलिनकरः प्रभाव एवाऽवरणनाम्ना प्रसिद्धः, स खलु अहङ्कारं विरहय्य गुरुदेवं च सर्वज्ञं ज्ञात्वा सप्रणिपातं शङ्कासमाधानपूर्वकं सन्देहनिवारणेनैव निवृत्तो भवति । एतेन शिष्यस्तत्त्वज्ञानमवाप्नोति, आध्यात्मिके पथि सुनिश्चितमग्रेसरति च । स्वरूपाच्छादकः पञ्चम आनन्दमयकोषो विज्ञेयः । तन्मलिनकारिणी 'अस्मिता' इत्युच्यते । सत्येन मनसा निजाहङ्कारनिवृत्तये जगद्गुरुरूपगुरुदेवचरण-सरसीरुहसन्निधाने आत्मसमर्पणेनैवास्मिता विनश्यति, तदानीं मुमुक्षुः साधकः कृतकृत्यतामापद्यते । विशेषतो बहूदकैः साधारणतः सर्वैरेव संन्यासिभिरुपर्युक्तविज्ञानस्य मननं निदिध्यासनं चावश्यमनुष्ठेयम् ।

——:***:——

## ४०—इष्टसाधनोपदेशः ।

बहूदकव्रतधारिणा यतिना ज्योतिर्ध्यानं विन्दुध्यानं वा विधेयम् । सर्वव्यापकः सच्चिदानन्दमयः परमात्मा सगुणो निर्गुणश्चापि वर्त्तते । साधकस्य मनोमन्दिरे विराजमानः सगुणः, बुद्धिगुहास्थितः कृतकृत्यकारी निर्गुणश्च बोद्धव्यः । एतद्रहस्यं श्रीगुरुदेवचरणकमलेभ्योऽधिगम्य निर्गुणसगुणध्यानसमता साधकेन प्राप्तव्या । निर्गुणध्यानमभ्यसितुं हठयोगप्रतिपादितं ज्योतिर्ध्यानं लययोगप्रोक्तं विन्दुध्यानं वा विधातुं साधकेन प्रयत्नोऽनुष्ठेयः । पूर्वोपदिष्टस्य प्रणवस्य वर्णात्मको ध्वन्यात्मकश्च भेदो मननीयः । यत्र कार्यं, तत्र कम्पः, यत्र च कम्पस्तत्र ध्वनिरपि नूनं भवति । साम्यावस्थातो वैषम्यावस्थां गच्छन्त्याः प्रकृतेः प्राथमिकत्रिगुणात्मकक्षोभेण सह ध्वन्यात्मकस्य प्रणवस्य सम्बन्धमवगन्तुं मननपूर्वकं तदनुसन्धाने यतिना प्रयतितव्यम् । तत्साधनपद्धतिं गुरुरुपदेक्ष्यति । दयालुना श्रीगुरुदेवेन सर्वमिदं शिष्यहितायोपदिश्य योगचतुष्टयं समुचितसाधनान्यप्युपदेष्टव्यानि । तत्सम्बद्धाः केचन साधनोपदेशा अधो निर्दिश्यन्ते—

( वहूदकसाधनोपदेशः )

द्वितीयस्य तु विज्ञेया पूजा प्रोक्ता हि मानसी।
चतुर्योगेषु प्रोक्तेषु योगस्तस्य हठस्स्मृतः॥
उपांश्वेव जपेन्नित्यं गुरुमन्त्रादिकं शुभम्।
सैश्वर्यायाः स्थूलमूर्तेः ब्रह्मणः परमेशितुः॥
ध्यानेन यदि तृप्तः स्यात्संन्यासी तु वहूदकः।
ज्योतिर्ध्यानेऽथवा विन्दुध्याने कुर्याद् रतिं सदा॥
निर्गुणाया एव शक्तेर्ध्यानमेतत् सहायकम्।
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसंभवम्॥
आत्मानं सर्वभूतानां परस्तात्तमसः स्थितम्।
सर्वस्याधारमव्यक्तमानन्दं ज्योतिरव्ययम्॥
प्रधानपुरुषातीतमाकाशं दहनं परम्।
तदन्तः सर्वभावानामीश्वरं ब्रह्मरूपिणम्॥
ध्यायेदनादिमद्वैतमानन्दादिगुणालयम्।
महान्तं परमं ब्रह्म पुरुषं सत्यमव्ययम्॥
सितेतरारुणाकारं महेशं विश्वरूपिणम्।
ओंकारान्तेऽथवात्मानं संस्थाप्य परमात्मनि॥
आकाशे देवमीशानं ध्यायीताकाशमव्ययम्।
कारणं सर्वभूतानामानन्दैकसमाश्रयम्॥
पुराणं पुरुषं शम्भुं ध्यायन्मुच्येत बन्धनात्।
यद्वा गुहायां प्रकृतौ जगत्सम्मोहनालये॥
विचिन्त्य परमं व्योम सर्वभूतैककारणम्।
जीवनं सर्वभूतानां यत्र लोकः प्रलीयते॥
आनन्दं ब्रह्मणः सूक्ष्मं यत् पश्यन्ति मुमुक्षवः।
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम्॥
अनन्तं सत्यमीशानं विचिन्त्यासीत संयतः।
गुह्याद्गुह्यतमं ज्ञानं यतीनामेतदीश्वरम्॥
योऽनुतिष्ठेत सततं सोऽश्नुते योगमीश्वरम्।
तस्माद् ध्यानरतो नित्यमात्मविद्यापरायणः॥
ज्ञानं समभ्यसन् नित्यं मुच्यते भवबन्धनात्।

यद्वा पृथक्त्वमात्मानं सर्वस्मादेव केवलम् ॥
आनन्दमक्षरज्ञानं ध्यायीत च पुनः परम् ।
यस्माद् भवन्ति भूतानि यद्गत्वा नेह जायते ॥
स तस्मादीश्वरो देवः परस्ताद्योऽधितिष्ठति ।
यदन्तरे तद्गमनं शाश्वतं शिवमव्ययम् ॥
यमाहुस्तत्परो नास्ति स देवः स्यान् महेश्वरः ।
अह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः ॥
तेषां स्नात्वा विशुद्धयर्थं प्राणायामान् षडाचरेत् ।
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्विषम् ॥
प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान् ।
इति साधनोपदेशाः ।

# ४१—बहूदकाचारोपदेशः ।

वर्णाश्रमधर्म्मयोः तयोः सर्वेषु विभागेषु च आचारस्य प्राधान्यमत एव कुत्रचिदाचारः प्रथमो धर्म्मः कुत्रचिच्च प्रधानो धर्म्म आचार इत्यभिहितम् । स्ववर्णाश्रमसम्बन्धी तयोर्विभागैश्च सम्बद्धो धर्म्मानुकूलः शारीरिको व्यापारः आचार इत्यभिधीयते । आचारं द्वारीकृत्यैव व्यक्तिविशेषस्याधिकारो निर्णीयतेऽतः कुटीचकबहूदकादिव्रत-परायणैः संन्यासिभिः स्वस्वाधिकारानुकूलाचाराणां पालनं यत्नतो विधेयम् । आचाराणां प्रभावो यथा स्वान्तःकरणे पतति तथैवाऽन्येषामप्यन्तःकरणेषु । कुटीचकाद्बहूदकाधिकार उन्नत इति बहूदकाचाराः संक्षेपतोऽधोनिर्दिश्यन्ते ।

## [ आचारोपदेशः ]

[ कुर्यात्तत्र बहूदकः ] आचार्यकार्यं शास्त्रोपपत्तिकांशोपदेशनम् ।
द्वितीयः खलु सूक्ष्मस्य त्यजेदभ्यासमन्वहम् ॥
रक्षेत्सदा प्रयत्नेन द्वितीयः सूत्रमात्रकम् ।
शिखा तस्य जटायां हि सम्यक् परिणता भवेत् ॥
प्राणान्ते स्थूलदेहस्य दाहादिविषये स्मृतिः ।
दहनं क्षेपणं वापि द्वितीयस्याऽनले जले ॥
बहूदकस्तु संन्यासी गुरुदेवस्य संनिधौ ।
स्पृष्ट्वा तीर्थजलं सम्यग् गृह्णीत व्रतमुत्तमम् ॥

त्यजेत्तदुक्तमखिलं सङ्कल्पेन बहूदकः ।
कुटीचकस्तु संन्यासी पूर्वलक्षणलक्षितः ॥
त्रिभिरेव हि वर्षैस्तु स बहूदकतां श्रयेत् ।
तत्त्वज्ञानेऽग्रसरतां विना किन्तु न तामियात् ॥
बहूदकस्य धर्मेषु विशिष्टानि मुनीश्वराः ।
वच्मि सर्वप्रधानानि लक्ष्यमाणानि यानि वै ॥
विश्वात्मना समं स्वस्य चक्ये यत्नो विशेषतः ।
जगद्ब्रह्मस्वरूपं वै ज्ञात्वा निष्कामकर्मकृत् ॥
केवलं स भवेन्नित्यं व्रतेऽस्मिन्निरतः शुचिः ।
पूर्णतायास्तथा लाभस्त्यागे तपसि यत्नतः ॥
अनिकेतः स्थिरमतिस्तथा च दृढसंयमी ।
न केषुचिदभिष्वङ्गो कश्चनापि हि कुत्रचित् ॥
तीर्थयात्राटनं चैव समासेन निबोधत ।
कामिनीकांचनाभ्यां हि वैराग्यं मनसा यदि ॥
पूर्णं नैवोपलब्धं चेन्न बहूदकतां श्रयेत् ।
संस्कारो ममतायाश्चेत्स्वजातिकुलबन्धुषु ॥
न पूर्णं मनसा नष्टो न बहूदकतां श्रयेत् ।
आत्मन्येव स्थितौ पूर्णा यदीच्छा नोपजायते ॥
कदापि विप्रो धर्मज्ञो न बहूदकतां व्रजेत् ।
कुटीचकस्य यत्त्वाहुर्मनसा पूजनं सदा ॥
देवर्षिनित्यपित्तॄणां यच्चाहुर्वै ह्यमन्त्रकम् ।
जगत्कल्याणबुद्ध्यैव महायज्ञविधानकम् ॥
सर्वमेतच्च संप्रोक्तं ब्रह्माण्डस्यात्मना सह ।
ज्ञेयं तन्मुनिभिर्नित्यमैक्यसम्बन्धवर्द्धकम् ॥
तयोर्बहूदकस्यास्ति न निषेधो न वा विधिः ।
संकल्पमोहरहितो यस्मात्स परिकथ्यते ॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रःस्यान्मात्रासंगाद्विनिर्गतः ॥
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः ।
अभिपूजितलाभश्च यतिर्मुक्तोऽपि वध्यते ॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेन च

अहिंसया च भूतानाममृतत्वाय कल्पते ॥
अवेक्षेत गतीर्नृणां कर्मदोषसमुद्भवाः ।
निरये चैव पतनं यातनाश्च यमक्षये ॥
विप्रयोगं प्रियैश्चैव संयोगं च तथाप्रियैः ।
जरया चाभिभवनं व्याधिभिश्चोपपीड़नम् ॥
देहादुत्क्रमणं चास्मात् पुनर्गर्भे च संभवम् ।
योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥
अधर्मप्रभवं चैव दुःखयोगं शरीरिणः ।
धर्मेण सुखमित्यादि स्मृतिकारवचस्तथा ॥
धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम् ।
सूक्ष्मताञ्चान्ववेक्षेत योगेन परमात्मनः ॥
देहेषु च समुत्पत्ति उत्तमेष्वधमेषु च ।
दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ॥
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ।
फलं कतकवृक्षस्य यद्यप्यम्बुप्रकाशकम् ॥
न नामग्रहणादेव तस्य वारि प्रसीदति ।
संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा ॥
शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ।
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपितम् ॥
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ।
जराशोकसमाविष्टं रोगायतनमातुरम् ॥
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ।
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥
विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम् ।
यदा भावेन भवति सर्वभावेषु निस्पृहः ॥
तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ।
अनेन विधिना सर्वान् त्यक्त्वा संगान् शनैः शनैः ॥
सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ।
ध्यानिकं सर्वमेवैतत्तदेतदभिशब्दितम् ॥
नह्यनध्यात्मवित्कश्चित् क्रियाफलमुपाश्नुते ।
अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च ॥

आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ।
इदं शरणमज्ञानामिदमेव विजानताम् ॥
इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ।
अनेन क्रमयोगेन परिव्रजति यो द्विजः ॥
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ।
वर्णाश्रमस्य धर्मं हि आर्यत्वस्य दृढं ध्रुवम् ॥
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान् ।
सिद्धिमेकस्य संपश्यन् न जहाति न हीयते ॥
अतिवादाँस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णाञ्च न वाचमनृतां वदेत् ॥
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥
न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥
तापसादिभिराक्रान्तं नागारं भिक्षया व्रजेत् ।
एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकम् ॥
वर्षाभ्योऽन्यत्र वर्षासु मासाँश्च चतुरो वसेत् ।
अभयं सर्वभूतेभ्यो दत्वा चरति यो मुनिः ॥
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥

इति बहूदक-संन्यासपद्धतिः ।

## ४२---हंसाधिकारप्राप्तिः ।

जीवन्मुक्तिपदप्राप्तये कुटीचको बहूदकः हंसश्चेति त्रयः सोपानभूताः अवगन्तव्याः । हंसो हि तृतीयं सोपानम् । त्रिष्वप्येतेषु एकैक उत्तरोत्तरं समुन्नतः । एते त्रयोऽपि साध्यकोटौ प्रविष्टाः, परमहंसस्तु सिद्धकोटिगः । अतो हंसव्रत एव साधनाधिकारपूर्णताऽधिगन्तव्या । साधनावस्थायां हंससंन्यासाधिकारः सर्वमतिरिच्यते । यावच्च साधकेषु पूर्वोक्ताश्चतस्र एषणा न विलीयेरन्, विषयेभ्यश्च पूर्णं वैराग्यं न प्रादुर्भवेत्, साधनचतुष्टयसिद्धिलक्षणानि च न प्रतीयेरन्, अहंकृतिर्वा न समूलं प्रणश्येत्, दम्भत्यागेन कर्मयोगस्य, आलस्यराहि-

त्येन भक्तियोगस्य, अहङ्काराभावेन ज्ञानयोगस्य च सिद्धिलक्षणानि नावाप्येरन् तटस्थज्ञानस्वरूपज्ञानयोश्च पार्थक्यानुभवो वा न दृष्टिगोचरतामुपेयात् न तावत्साधको हंसव्रतग्रहणस्य पूर्णोऽधिकारी भवेत्। यदि गुरुदेवः कुत्रचन साधके सर्वविधमप्युन्नतं लक्षणं परिपश्येत्, तर्हि तं मुमुक्षुं भाग्यशालिनं कुटीचकबहूदक-हंसनामकदीक्षात्रयेण सहैव दीक्षितं कर्तुं शक्नोति। परमस्य वैराग्यस्य, पराया भक्तेः, आत्मज्ञानस्य चाधिकारवतः सिद्धस्य कृते नहि किल देशकालसापेक्षता. त्रैवार्षिकव्रतग्रहणस्यापि च न प्रयोजनम्। हंसव्रतधारी महापुरुष एव हंसदीक्षां दातुं शक्नोति। परमहंसस्तु तत्कृते समर्थ एव। तत्कृपा तु तदर्थं नितरां प्रशस्ता।

---

## ४३--शिखासूत्ररहस्यम्।

शिखा सूत्रं नाम वर्णाश्रमधर्मावलम्बिन्या आर्यजातेः परमावश्यकं चिह्नम्। सदाचारः, वर्णधर्मः, आश्रमधर्मः, नारीणां पवित्रता, सर्वास्ववस्थासु चाध्यात्मिकं लक्ष्यमिति लक्षणमार्यजातेः। यत्रैतत्सर्वं नोपलभ्यते, साऽनार्या जातिरिति। आर्यानार्यजात्योरयमेव वेदशास्त्रसम्मतो भेदः। त्रिलोकपावन्याः, देवर्षिपितृसंवर्द्धनकारिण्याः, आध्यात्मिकोन्नतिशीलाया आर्य्यजातेः शिखा सूत्रं च प्रकृष्टं चिह्नम्। शिखा हि आध्यात्मिकलक्ष्यसूचिका। जीवनं च यज्ञमयमनुष्ठातुं यज्ञसूत्रापरनामकं यज्ञोपवीतमध्यात्मोन्नतिशालिभिर्मानवैः परिधातव्यमिति वेदाः शास्त्राणि च समामनन्ति। मनसो बुद्धेश्च सदोद्ध्र्वमुखीकरणमेवाध्यात्मिकलक्ष्यस्य रहस्यमवगन्तव्यम्। शिखाया धारणं तद्बन्धनं चाध्यात्मलक्ष्यस्थैर्ये परमं साहाय्यकरं प्रतिपादितम्। सदा सदाचारपरायणानां मानवानां शिखासु ब्रह्मविष्णुमहेश्वराणां, नित्यानां देवर्षिपितृणां च निवासः शास्त्रसम्मतः। आर्यजातीयानां द्विजानां निखिलमपि जीवनं यज्ञमयमिति हेतोस्तैरध्यात्माधिदैवाधिभूतरूपत्रिविधशुद्धये त्रिगुणितं यज्ञसूत्रं परिधेयमिति वेदेषु शास्त्रेषु च परिदृश्यते। अतो हि शिखासूत्रपरित्यागत आध्यात्मिकलक्ष्यराहित्यं यज्ञमयजीवनहीनत्वं च मनुष्येषु समुत्पद्यते। एवम्भूतयोस्त्रिलोकपवित्रकरयोः शिखासूत्रयोः परित्यागो ब्रह्मचारिभिर्गृहस्थै र्वानप्रस्थैश्च न कदाप्यनुष्ठेयः। यतस्तत्त्यागेन तैः पतितैर्भूयते। कुटीचकै र्बहूदकैरपि संन्यासिभिः शिखासूत्रपरित्यागो न विधेयः। आध्यात्मिकपथपथिको मुमुक्षु र्यावत्कृतकृत्यो योगारूढो न भवेत् न तावत्तेन त्रिलोकपवित्रकरवर्णाश्रमचिह्नानि परित्यक्तव्यानि।

यदा हि संन्यासधर्मस्यान्तिमां हंसदीक्षां श्रीगुरुदेवकृपापरम्परयाऽधिगच्छति, तदैव साधको वर्णाश्रमबाह्यचिन्हानि परित्यज्यान्तर्मुखो भवितुमधिकारं प्राप्नोति। जीवन्मुक्तपदमधिगन्तुं कुटीचक-बहूदक-हंस-परमहंस-धर्माः सोपानस्वरूपाः स्वातन्त्र्येण सुनिरूपिताः। मध्यमवैराग्यम्, उत्तमवैराग्यम्, अधिमात्रवैराग्यम्, परं वैराग्यमित्यादिभिश्चतुर्भिरधिकारैस्तद्धर्माः कथमिव सम्बन्धनिबद्धा इति पूर्वमेव समुपबृंहितम्। योगारूढदशाचरितार्थता परमहंससंन्यासिष्वेव सम्भवति। अत एव परमहंसधर्मदीक्षा न कापि विद्यते। यतोऽसौ स्वयं, सिद्धस्वरूपा। परमहंसदशाद्वारभूतस्य हंसधर्मस्यैव दीक्षा शास्त्रेषु निर्दिष्टा। हंसदीक्षाग्रहणकाले शिखासूत्रयोः परित्याग आवश्यकः। तदानीं तादृशमुमुक्षुणा आत्मारामेण सता तत्त्वतस्त्रिलोकेन सह सम्बन्धविच्छेदं कर्तुं पार्यते। यावच्च वासनानां पूर्णो विलयः, एषणानां सर्वथा परित्यागः मनोनाशस्य यथेष्टं लक्षणं, तत्त्वज्ञानेन चात्मज्ञानोपलब्धेः परिपूर्णा योग्यता मुमुक्षुषु न सम्यक् समुत्पद्येरन्, न तावत्तैर्योगारूढैर्भवितुं शक्यते, न वा तैर्वर्णाश्रमधर्मबाह्यचिन्हानि शिखायज्ञोपवीतादीनि परित्यक्तुं पार्यन्ते। योगारूढानामात्मारामहात्मनामेव कृते आध्यात्मिकोन्नतिबहिर्लक्षणस्वरूपशिखाधारण-निष्प्रयोजनीयताऽवगन्तव्या, तथा च निर्विकल्पसमाधिसंयुक्तमहात्मान्तःकरणं सर्वदैव यज्ञमयमिति तत्कृते यज्ञमयजीवन-बहिर्लक्षणरूप-यज्ञसूत्रसंरक्षणस्यानावश्यकत्वमवधेयम्। सुतरां समुन्नताधिकारसम्पन्नेनैव महात्मना शिखासूत्रादीनि परित्यक्तव्यानीति निष्कर्षः।

## ४४–हंससंन्यासव्रतग्रहणम्।

बहूदकव्रतावस्थायामात्मानं हंसव्रतयोग्यतावन्तं परिभाव्य मुमुक्षुणा साधकेन श्रीगुरुदेवचरणसरोरुहशरणं शरणीकुर्वता सप्रणिपातं स्वीयमभिमतं निवेदनीयम्। ततश्च कृपासागरो गुरुः पूर्वोक्तां पद्धतिमनुसृत्य शुभे काले स्नान-संकल्पादिकं कारयित्वा शिष्यं हंसदीक्षया दीक्षेत। यथापूर्वं योग्यब्राह्मणद्वारा गणपतिपूजनं, पुण्याहवाचनम्, अग्निस्थापनं च विधाप्य प्राणादिहोमं पुरुषसूक्तहोमं, विरजाहोमं च समाप्य शिखासूत्रे हावयेत्। शिखासूत्रहवनविशिष्टो विधिरधोनिर्दिश्यते।

### ( शिखासूत्रहवनविधिः )

"अभयं सर्वभूतेभ्यः स्वाहा" इति प्राच्यां दिशि अपां पूर्णाञ्जलिं क्षिप्त्वा शिरसि स्थापितकेशानुत्पाट्य यज्ञोपवीतमप्युद्धृत्यैकीकृत्य करे गृहीत्वा "वेदांत-

विज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः । ते ब्रह्मलोके तु परान्तकाले पराऽमृतात्परिमुच्यन्ति सर्वे ॥" "ॐ आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि ॐ भूः स्वाहा" इत्यप्सु जलैः सह हुत्वा प्रार्थयेत् । "सर्वदेवात्मके तोये तोयाहुतिमहं हरे ॥ दत्वा सर्वेषणां त्यक्त्वा युष्मच्छरणमागतः । त्राहि मां सर्वलोकेश गतिरन्या न विद्यते । संन्यस्तं मे जगन्नाथ पाहि मां मधुसूदन ॥ त्राहि मां सर्वदेवेश वासुदेव सनातन । संन्यस्तं मे जगद्योने पुण्डरीकाक्षमोक्षद ॥ अहं सर्वाभयं दत्वा भूतानां परमेश्वर । युष्मच्छरणमापन्नस्त्राहि मां पुरुषोत्तम ॥" इति विष्णोः प्रार्थना ।तदन्तरं श्रीगुरुदेवः पूर्वोक्तप्रकारेण नूतनं चिन्हं परिधाप्य शिष्यं भाग्यवन्तं प्रणवमन्त्रेणाभिषेचयेत् । ततश्च शान्तिपाठपूर्वकमात्मशक्तिं परिपूरयितुं गुरुः कूटस्थे स्वरूपे वा स्थित्वा हृदयालम्मनद्वारा शिष्यं कृतकृत्यं कुर्यात् ।

---

## ४५—प्रणवप्रवेशः प्रेषनिदिध्यासनं च ।

प्रलयकाले स्थूलं वस्तुजातं सूक्ष्मे, तच्च प्रणवे, सोऽपि मूलप्रकृतौ, साऽपि च परे ब्रह्मणि विलीयते । तदाद्वैतसत्तैव केवलमवशिष्यते । संन्यासदीक्षासु हंसदीक्षैवान्तिमा । अतोऽन्तिमदीक्षायामेवास्यां योगिराजः श्रीगुरुदेवः प्रणवप्रवेशमार्गं सरलं विधाय गुरुभक्तिपरायणं शिष्यं कृतार्थयति । समष्टिव्यष्टिरूपेण ब्रह्माण्डं पिण्डं चापि समानमेव । पुरुषशक्तिः प्रकृतिशक्तिर्वा, पुरुषभावः प्रकृतिभावो वा चित्सत्तावैभवं, सत्सत्तावैभवं वा यदेतत्सर्वं ब्रह्माण्डे समुपलभ्यते, तत्सर्वं पूर्णावयवमानवपिण्डेऽपि विद्यते । अत एव कारणात् सकलानां देवानां ग्रहनक्षत्रादीनां च पीठानि मानवशरीरे प्रकटीभवन्ति । लययोगसिद्धान्तमनुसृत्य सहस्ररन्ध्रे परमपुरुषस्य, आधारचक्रे च कुलकुण्डलिनीरूपिण्याः परमायाः प्रकृतेश्च स्थानं निर्दिष्टम् । यावत् साधकस्य प्रवृत्तिर्बहिर्मुखीभावमवलम्बते, यावच्च तदीया दृष्टिर्विषयमनुधावति, यावच्चापि साधकोऽविद्याराज्ये भ्राम्यति; तावत् तस्य देहस्थिताऽऽधारचक्रे विद्यमाना कुलकुण्डलिनीरूपिणी महाशक्तिः प्रसुप्ता तिष्ठति इति लययोगसिद्धान्तः । गुरुदेवस्य दयापरम्परया साधको यदान्तर्दृष्टिं प्राप्नोति, भुवनेश्वर्य्याश्च कृपाकलापेन अविद्याजालं छित्वा विद्यासुखदक्रोडमुपढौकते, यदा च तस्य दृष्टिर्विषयविरहिता स्वात्मानमभिलक्ष्य समाहिता भवति; तदैव तस्मिन् मानवे कुलकुण्डलिन्या देव्याः प्रबुद्धेः प्रारम्भः, त्रयाणामप्येषां पूर्णतायां सम्पद्यमानायामेव कुलकुण्डलिनी महाशक्तिः प्रबुद्धा सहस्ररन्ध्रमभिगम्य परमपुरुषे विलीयते । यावदेतन्न भवति, न तावत् द्रष्टृदृश्ययोः पारस्परिको गुम्फितः सम्बन्धो विच्छिद्यते, न च तावज्जीवोऽविद्या-

ऽस्मितारागद्वेषाऽभिनिवेशक्लेशपाशत आत्मानं मोचयितुं शक्नोति। एतद्-ज्ञानजालभेदनोपयोगी सरलतर उपायः प्रणवप्रवेश एव। प्रणवः कथमिव परमात्मवाचको भवतीति पूर्वं विज्ञातव्यम्। तदनु विचारद्वारा चित्ताकाश—चिदाकाश-महाकाशतस्तदविमिश्र-सम्बन्धो बोद्धव्यः। ततश्च कथमिव प्रपञ्च-जातं शब्दे, शब्दश्च प्रणवे प्रविशतीति ज्ञेयम्। ततो हि तैलधारवदविच्छिन्नो दीर्घघण्टानिनादवदखण्डो ध्वन्यात्मकः प्रणवः किमिव ब्रह्मप्रकृतौ विलयं गच्छतीत्यनुभवितव्यम् एतद्राजयोगरहस्यावगत्यैव प्रणवप्रवेशक्रिया सिध्यति। यः किल यती राजयोगिनो गुरुदेवस्य कृपया इमां प्रणवजपस्य सिद्धिं प्राप्नोति, तत्र स्वयमेव संन्यासदीक्षाबीजस्वरूपप्रेषमन्त्र-निदिध्या-सनशक्तिः प्रकटीभवति। तदा भूर्भुवः स्वरिति त्रयाणां लोकानां त्यागस्य का कथा; मनोनाशपूर्वकं सर्वा एव वासनाः साधकस्य समूलं प्रणश्यन्ति। अन्तःकरणस्यैकतत्त्वमय्या आत्मोन्मुखगत्याऽसौ प्रकृतिराज्यमतिक्रम्य स्वयं कृतकृत्यो भवति।

---

## ४६—हंससाधनोपदेशः।

साधनावस्थाया अन्तिमा सीमा हंसव्रतम्, अतो लययोगस्योच्चस-साधनानां राजयोगस्य साधनानाञ्च साधनेऽधिकारः हंसव्रतधारिणो यतेर्वि-हितः। एतेषां साधनानां विस्तृतविवरणं लययोगसंहितायां राजयोग-संहितायां च द्रष्टव्यम्। यावत् स्वस्वरूपोपलब्धिर्न भवेत्तावत्साधनाभ्यासो निरन्तरं करणीयः। सिद्धावस्थाप्राप्तावपि स्वस्वरूपोपलब्धिकर्तृभी राजयोगि-भिरपि साधनाभ्यासो न त्यज्यते। अध्यात्ममार्गेऽग्रसरतामारुरुक्षूणां यतीनां कृते साधनमेव निमित्तकारणम्। परञ्च योगारूढा महात्मानोऽपि स्वभावत एव साधनरता भवन्ति। अन्तिमसाधनस्य बीजमन्त्रं प्रणवः लक्ष्यञ्च तस्य चतुर्णां वेदानां चतुर्षु महावाक्येषु प्रस्फुटितमस्ति। महा-वाक्यानि तेषां विवरणञ्चोपनिषद्भ्यो संगृह्याऽधो लिख्यते।

नित्यानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
विश्वातीतं गगनसदृशं तत्त्वमस्यादि लक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि॥

अथ महावाक्यानि चत्वारि। यथा ॐ प्रज्ञानमानन्दं ब्रह्म॥ १॥

ॐ अहं ब्रह्मास्मि ॥ २ ॥ ॐ तत्त्वमसि ॥ ३ ॥ ॐ अयमात्मा ब्रह्म ॥ ४ ॥

ज्ञानं ज्ञेयं ज्ञानगम्यादतीतं,
शुद्धं बुद्धं मुक्तमप्यव्ययं च ।
सत्यं ज्ञानं सच्चिदानन्दरूपं,
ध्याये देवं तन्महो भ्राजमानम् ॥

जीवत्वं सर्वभूतानां सर्वत्राखण्डविग्रहम् ।
चित्ताहङ्कारयन्तारं जीवाख्यं त्वं पदं भजे ॥
जीवे ब्रह्मेति वाक्यार्थं यावदस्ति मनःस्थितिः ।
ऐक्यं तत्त्वं लये कुर्वन् ध्यायेदसिपदं सदा ॥
येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥
चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥
परिपूर्णः परात्मास्मिन् देहे विद्याधिकारिणि ।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥
स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्य-परामर्शस्तेन ब्रह्म भवाम्यहम् ॥
एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वं पदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ।
स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।
अहंकारादि देहान्तं प्रत्यगात्मेति गीयते ॥
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥

अनात्मदृष्टेरविवेकनिद्रामहं मम स्वप्नगतिं गतोऽहम् ।
स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥
वाच्यं लक्ष्यमिति द्विधाऽर्थसरणी वाच्यस्य हि त्वं पदे ।
वाच्यं भौतिकमिन्द्रियादिरपि यल्लक्ष्यं त्वमर्थश्च सः ॥
वाच्यं तत्पदमीशताकृतमतिर्लक्ष्यं तु सच्चित्सुखा-
नन्द ब्रह्म तदर्थ एष च तयोरैक्यं त्वसीदं पदम् ॥

त्वमिति तदिति कार्ये कारणे सत्युपाधौ ।
द्वितयमितरथैकं सच्चिदानन्दरूपम् ।
उभयवचनहेतु-देशकालौ च हित्वा ।
जगति भवति सोऽयं देवदत्तो यथैकः ॥
कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥
श्रवणं तु गुरोः पूर्वं मननं तदनन्तरम् ।
निदिध्यासनमित्येतत्पूर्णबोधस्य कारणम् ॥
अन्यविद्यापरिज्ञानं अवश्यं नश्वरं भवेत् ।
ब्रह्मविद्यापरिज्ञानं ब्रह्मप्राप्तिकरं स्थितम् ॥
महावाक्यानुपदिशेत् सषडङ्गानि देशिकः ।
केवलं नहि वाक्यानि ब्रह्मणो वचनं यथा ।
हंसो चिन्दूपासनायामधिकारी निगद्यते ।
आत्मपूजा तृतीयस्य प्रोक्ता विद्वद्वरैः सदा ॥
योगेषु च लयः प्रोक्तस्तृतीयस्य मुनीश्वरैः ।
तृयीयो मानसं सम्यग्जपेन्नित्यमतन्द्रितः ॥
सन्त्यजेत्संयमी नूनमध्यासं कारणस्य च ।
तृतीयः पूतहृदयः सर्वसंगविवर्जितः ॥
हंसो भवेत्सर्वथैव तत्तत्संस्कारवर्जितः ।
साधनानां परं तस्य राजयोगोऽस्ति साधनम् ॥
तस्य व्रतमिदं ज्ञेयं निष्कामव्रतमेव हि ।
धारणाऽपि च सा तस्य जगत्कल्याणधारणा ॥
ब्रह्मज्ञानं हि तद्ध्यानं धर्मेषु सकलेष्वपि ।
ऐक्यबुद्धिस्तु बुद्धिः स्यात्सम्प्रदायेष्वपि भृशम् ॥
मित्रे शत्रौ सुखे दुःखे स्त्रियां पुंसि तथैव च ।
स्वर्णे लोष्ठे चषु साम्यं द्वन्द्वेष्वन्येष्वपि ध्रुवम् ॥
समाधिः कथितस्तस्य महामहिमशालिनः ।
असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ॥
अर्थानर्थेच्छया लोभं भयं तत्त्वावमर्षणात् ।
आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया ॥
योगान्तरायान् मौनेन हिंसां कामाद्यनीहया ।

कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ॥
आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ।
रजस्तमश्च सत्त्वेन सत्त्व चोपशमेन च ॥
एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ।
प्रवृत्तिश्च निवृत्तिश्च मार्गद्वयमुदीरितम् ॥
गार्हस्थ्ये हि प्रवृत्ते वैं त्ववसानं निगद्यते ।
निवृत्तेः पूर्णता युक्ता हंसस्यैवाश्रमे ध्रुवम् ॥
यतः परमहंसस्य निस्त्रैगुण्या दशा मता ॥

---

## ४७–हंसाचारोपदेशः ।

यावन्मनुष्यशरीरस्यास्तित्वं तावत् स्वस्वधर्म्मानुकूलसदाचाराणां पालनमवश्यमेव करणीयम् । उक्तञ्च गीतोपनिषदि—

तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।
असक्तो ह्याचरन्कर्म्म परमाप्नोति पूरुषः ॥
कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥
काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः ।
सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥
त्याज्यं दोषवदित्येके कर्म्म प्राहुर्मनीषिणः ।
यज्ञ दानतपः कर्म्म न त्याज्यमिति चापरे ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥
यज्ञदानतपः कर्म्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥
नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते ।

मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥
दुःखमित्येव यत्कर्म्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नेव त्यागफलं लभेत् ॥
कार्य्यमित्येव यत्कर्म्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥
न द्वेष्टयकुशलं कर्म्म कुशले नानुसज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥
न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः ।
यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥

यथा यथाध्यात्मिकोन्नतिसोपानारोहणं विज्ञजनैः क्रियते, तथा तथैव त लोककल्याणाग्राधिकं प्रयतितव्यम् । आचारधर्म्मो लोकहितकरोऽप्यत एव सर्वश्रेष्ठहंसव्रतपरायणैः सन्न्यासिभिः जगत्कल्याणबुद्ध्या आचारपालन-तत्परैर्भवितव्यम् । हंसधर्म्मावलम्बिनः सन्न्यासिनः केचनाचारा अधोलिख्यन्ते ।

( हंसाचारोपदेशः )

संन्यासी ज्ञानवान् हंसो विधाय भ्रमणं मुदा ।
संसारे ज्ञानविस्तारं कुर्यादेव प्रयत्नतः ॥
हंसः परमहंसश्च यदीच्छन्तावुभौ तदा ।
क्षौरं प्रत्ययनं कर्तुमर्हतः पूतमानसौ ॥
एकदण्डं तृतीयस्तु धारयेत्सततं शुचिः ।
एकवारं तृतीयस्तु स्नानं कुर्यादतन्द्रितः ॥
तृतीयः श्रद्धया भस्म धारयेत्पूतमानसः ।
तृतीयस्य तु विज्ञेया वृत्तिराजगरी शुभा ॥
आचार्यस्य गुरोश्चापि कार्यं कुर्यात् तृतीयकः ।
सूत्र-शून्यो भवेद्धंसः स्वेच्छाधीनैव तज्जटा ॥
पूज्यो भवेत्तृतीयस्तु नियतमाद्ययोर्द्वयोः ।
नद्यां क्षेपस्तृतीयस्य क्षित्यन्तर्वा निवेशनम् ॥
नारायणस्वरूपं तु स्पृष्ट्वा होमानलं स्वयम् ।
गृह्णीयाद्धंस-संन्यासो व्रतं परमभद्रदम् ॥
यदा तु जायते विप्राः तत्त्वज्ञानस्य योग्यता ।
बहूदको भवेद्धंस स्तदात्मानं समुन्नयन् ॥

यदा च योग्यताप्राप्ति र्मनोनाशस्य जायते ।
तदैव हंसावस्थायां विचरेद् योगिराट् मुदा ॥
यद्येवं योग्यता न स्यात्तदा पूर्वोक्तयोर्वसेत् ।
हंसाधिकारे तत्त्वज्ञः निष्कामव्रततत्परः ॥
ब्रह्म मत्वा जगद्रूपं कर्मयोगी मनो जयन् ।
जगत्यां सत्यधर्मस्य तत्त्व-ज्ञानस्य चैव हि ॥
विस्तारे यत्नमादध्याद् व्रती भूत्वा निरन्तरम् ।
अस्यां दशायां संन्यासी उन्नतं लभते पदम् ॥
जगद्गुरोः प्रतिनिधेर्महनीयं महर्षयः ! ।
दृष्टानुश्रविकाभ्यां चेद् विषयाभ्यां यदा नृणाम् ॥
परवैराग्यसम्प्राप्तिस्तदा हंसव्रतं चरेत् ।
पराभक्त रहस्यं हि ज्ञात्वा साधकसत्तमः ॥
तत्त्वज्ञानं चानुभूय तदा हंसव्रतं चरेत् ।
उत्तरोत्तरमेतेषामाश्रमाणां विधारणे ॥
ज्ञानाधिकारप्राधान्यं न कालस्य प्रधानता ।
संन्यास्येतज्जगन्मान्यं धृत्वा हंस-महाव्रतम् ॥
लभते ह्युत्तमां विप्राः ! पदवीं वै जगद्गुरोः ।
स निष्काम-कर्म-योग-व्रतं धृत्वा महीं चरन् ॥
लोककल्याणकर्तार-मुपदेशं ददत्तथा ।
दीक्षादानं महत्कुर्वन्नभयं च प्रचारयेत् ॥
जगत्-कल्याणबुद्ध्यैव केवलं देहधारणम् ।
तपः समीरितं तस्य सर्वप्राणिहितैषिणः ॥
ज्ञानोपदेशाज्जीवेभ्य स्त्वभयं दानमुत्तमम् ।
दानं स्वभावजं विद्धि तत्तस्य विदितात्मनः ॥
तदैव सम्भवस्त्वस्या उन्नताया विशेषतः ।
दशाया हंससंज्ञाया यदा द्रष्टृत्वमाप्नुयात् ॥
हंसस्य कर्मणां सप्त भूमिकायास्तथैव च ।
उपासनायाः सप्तानां भूमिकानां मुनीश्वराः ॥
भूमिकानाञ्च सप्तानां ज्ञानस्य परमर्षयः ।
रहस्यं स्यात्तस्य सप्त दर्शनानां च हृद्गतम् ॥
चतुर्णां योगमार्गाणां स स्याच्च पथदर्शकः ।

संन्यास्येतदवस्थाढ्यो मनसि प्रलयं गते ॥
उन्नतायां दशायां हि ब्रह्मसद्भावमृच्छति ॥
पूजनीयोऽधिकं त्वेषु परः पर इति स्मृतिः ।
अन्तिमस्तु विशेषेण साक्षाद् ब्रह्मस्वरूपभाक् ॥
हठ-मन्त्र-लयानां वै योगानां च यदा भवेत् ।
आचार्यस्तत्त्वविद्योगी तदा हंसव्रतं चरेत् ॥
राजयोगे यदा पूर्णाधिकारी योगिराड् भवेत् ।
स महापुरुषो विप्राः ! तदा हंसव्रतं चरेत्, ।
भूमिका कर्मयोगस्य शुभेच्छा प्रथमा स्मृता ।
विचारणा द्वितीया स्यात् तृतीया तनुमानसा ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
परार्थभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥
पूर्णज्ञानं विनैतासां राजयोगी भवेन्नहि ।
उपासनाया भक्तेश्च भूमिका गदतः शृणु ॥
प्रथमा भूमिका नाम परा रूपपराऽपरा ।
स्याद्विभूतिपरानाम्ना तृतीया भूमिका मता ॥
तथा शक्तिपरा नाम चतुर्थी भूमिका भवेत् ।
एवं गुणपरा ज्ञेया भूमिका पञ्चमी बुधैः ॥
षष्ठी भावपरा ज्ञेया सा स्वरूपपरान्तिमा ।
पूर्णज्ञानं विनैतासां राजयोगी भवेन्नहि ॥
ज्ञानस्य भूमिका विप्राः! इमाः सर्वाः प्रकीर्तिताः ।
ज्ञानदा ज्ञानभूमेर्हि प्रथमा भूमिका मता ॥
संन्यासदा द्वितीया स्यात्तृतीया योगदा भवेत् ।
लीलोन्मुक्तिश्चतुर्थी वै पञ्चमी सत्पदा स्मृता ॥
षष्ठ्यानन्दपदा ज्ञेया सप्तमी तु परात्परा ।
पूर्णज्ञानं विनैतासां तद्गुरुचानुभवं विना ।
सम्बन्धज्ञानमन्योन्यमेतासामन्तरा तथा ॥
कथञ्चिदपि संन्यासी राजयोगी भवेन्नहि ।
चतुर्धा गुरवो ज्ञेया स्तत्र शिक्षागुरुः खलु ।
व्यावहारिक-शिक्षायाः प्रवर्तक उदाहृतः ॥
विद्यागुरुर्यो वेदादि शास्त्रमध्यापयेत्सुधीः ।

दीक्षागुरुर्यः शिष्यान् स्वान् योजयेदवधानतः॥
कर्मोपासनयोर्मध्येऽन्यतरस्मिन् विधानतः।
जगद्गुरुः स विज्ञेयः शिष्यानुपदिशन् हि यः॥
ब्रह्मविद्यां नयेत् कालं लोकसंग्रहणेच्छया।
पूजनीयोऽधिकं त्वेषु परः पर इति स्मृतिः॥
अन्तिमस्तु विशेषेण साक्षाद्ब्रह्म स्वरूपभाक्।
सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते॥
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते।
अहिंसयेन्द्रियासङ्गै वैदिकैश्चैव कर्मभिः॥
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम्।
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥
तत्सूत्रं धारयेद् योगी योगवित्तत्त्वदर्शिवान्।
बहिःसूत्रं त्यजेद् विद्वान् योगमुत्तममास्थितः॥
ब्रह्मभावमिदं सूत्रं धारयेद् यः सचेतनः।
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्॥
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम्।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः॥
ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते॥
गुणत्रयस्य या नित्या धारणा तत्त्रिदण्डकम्।
यद्वाऽध्यात्माधिदैवाधिभौतिकत्रयधारणम्॥
बुधास्त्रिदण्डमाहुर्वै तयोरन्तिममुत्तमम्।
प्रकृतेःपुरुषस्यापि द्रष्टृ दृश्यस्य चैव हि॥
धारणां प्राहुरात्मज्ञा द्विदण्डमिति शब्दतः।
स्वरूप-ज्ञानमात्रेऽत्र स्थितिर्यस्य द्विजन्मनः॥
एकदण्डी सविज्ञेयः सर्वस्मादपि चोत्तमः।
तेषामेव स्मारका वै स्थूलदण्डा इमे मताः॥
दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम्।
पुण्यस्थलसमुत्पन्नं नाना कल्मषशोधकम्॥
अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम्।
नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा विभ्रियाद्यतिः॥

दण्डात्मनोस्तु संयोगः सर्वथा हि विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥
संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्वा परं ब्रह्माधिगच्छति ॥
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥
ये च सन्तानजा दोषा ये दोषा देहसंभवाः ।
प्रेषाग्निर्निर्दहेत्सर्वांस्तुषाग्निरिव काञ्चनम् ॥
कपालं वृक्षमूलानि कुचैलमसहायता ।
उपेक्षा सर्वभूतानामेतावद् भिक्षुलक्षणम् ॥
यस्मिन् वाचः प्रविशन्ति वाप्यां त्रस्ता द्विपा इव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् ।
ब्राह्मणानां विशेषेण नैव ब्रूयात्कथञ्चन ॥
यद्‌ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।
तूष्णीमासीत निन्दायां कुर्वन् भैषज्यमात्मनः ॥
वसतिः सोऽमृतो नित्यं यो हिंसां न प्रपद्यते ।
अहिंसकः समः सत्यो धृतिमान् नियतेन्द्रियः ॥
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ।
एवं प्रज्ञानतृप्तस्य निर्भयस्य निरामिषः ॥
न मृत्योरतिगो भावः स मृत्युमधिगच्छति ॥
प्रतिष्ठा सूकरी-विष्ठा-समा गीता महर्षिभिः ।
तस्मादेनां परित्यज्य कीटवत् पर्यटेद् यतिः ॥

इति हंसदीक्षापद्धतिः समाप्ता ।

---

## ४८—परमहंसदशा ।

परमहंसदशाप्राप्तये पद्धतेर्नाऽऽवश्यकत्वं यतो हि हंसव्रतपालनतत्परस्य सन्न्यासिनः सा दशा स्वभावतो जायते, तस्यां दशायां विधिनिषेधासत्त्वाच्च । जीवन्मुक्तस्य सन्न्यासिनः कृतेऽवस्थाविशेषत्वं परमहंसदशात्वम् । जीवन्मुक्ति-परमहंसदशाशब्दौ पर्य्याय-वाचकौ । तुरीयावस्थायां यदा दशेयं जायते तदा

तस्याः कृते साधनस्यानापेक्षा। इमामवस्थामुद्दिश्य शास्त्रेषु यानि वचनान्युपलभ्यन्ते तानि संक्षेपतोऽधो निर्दिश्यन्ते।

व्रतग्रहणविषये याज्ञवल्क्यः—

"परः परमहंसोऽसौ वर्तताद्वैतभावनः।
आत्मतत्त्वं स्वयं स्मृत्वा गृह्णीयात्परमं व्रतम्॥
पूज्यः परमहंसः स संन्यासी विगतज्वरः।
कुर्वन्नकुर्वन् वा किञ्चिदसौ नारायणः स्मृतः॥"
"पुण्यः परमहंसोऽसौ ब्रह्मोपास्तौ स्वतः क्षमः।"

दण्डाधिकारविषये—

"न विधिर्न निषेधोऽस्य चतुर्थोऽनियमो ह्ययम्।
देवपूजाधिकारी नाप्यात्मारामो मतः स्वयम्॥
योगादिसिद्ध्या किं तस्य राजयोगे व्यवस्थितिः।
पूज्यः परमहंसोऽयं विबुधेश्वरतां गतः।
सर्वदाऽनुभवं ह्यन्तः प्रणवस्य करोत्यलम्।"
"सर्वथा पूजनीयोऽयं मार्गं विधिनिषेधयोः।
अतीतः परमो हंसः प्राप्नोति ब्रह्मरूपताम्।"

दीक्षाप्रदानविषये—

"न विधिर्न निषेधश्च चतुर्थस्य कदाचन।"

प्राणान्ते देहस्य दाहादिविषये—

"चतुर्थस्य विशेषो न नियमोऽस्त्यत्र कश्चन।"

ऐश्वर्य्यत्यागविषये—

"संन्यासी परमो हंसः सर्वेषां भक्तिभाजनम्।
ब्रह्मस्वरूपस्तत्तस्य क्व निषेधः क्व वा विधिः।
भेदः परमहंसस्य ब्रह्मणा सह कोऽपि नो।"
"अहमेवास्मि ब्रह्मेति भावस्यानुभवं विना॥
कश्चित्परमहंसस्य पदवीं लभते नहि।
द्वैतभावदशायान्तु कदाचिन्नैव जायते।
सच्चिदानन्दरूपा याऽप्यद्वैतस्थितिरुत्तमा।
अस्यामेव दशायां सा त्वन्तिमायां प्रवर्तते।
तदानीं जायते चात्मारामः संन्यासिसत्तमः।"

''आत्मारामस्य भेदोऽपि द्विविधः परिकीर्तितः ।
प्रारब्धकर्मणस्तस्य भेदतो न स्वतो हि सः ।
परहंसस्य प्रारब्धकर्मवैचित्र्यदर्शनात् ।
ईशकोटिर्ब्रह्मकोटिरिति द्वे नामनी श्रुते ।
ब्रह्मकोटेः परो हंसो मूकस्तब्धोजड़स्तथा ।
उन्मत्तो बालचेष्टश्च न जगत्तेन लाभवान् ।
ईशकोटेः परो हंसः परां काष्ठां गतोऽनिशम् ।
निष्कामस्य व्रतस्यात्र जगज्जन्मादिशक्तिमान् ।
जगदीशप्रतिनिधिर्भूत्वा तत्कर्मसंरतः ।
जगद्धिताय विप्रर्षे ! एनं विद्धीशरूपिणम् ।
परहंसस्त्वीशकोटेर्ब्रह्मरूपधरोऽपि सन् ।
देवर्षिशक्तियुक्तश्च भवतीति विनिश्चयः ।''
''ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।
अयाचितं यथा लाभं भोजनाच्छादनं भवेत् ।
परेच्छया च दिग्वासाः स्नानं कुर्यात्परेच्छया ।
स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ।
यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ।
निष्क्रम्य वनमास्थाय ज्ञानयज्ञो गतस्पृहः ।
कालाऽऽकांक्षी चरन्नेव ब्रह्मभूयाय कल्पते ।
निर्मानश्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृतं भाषते गिरा ।
पुण्यायतनचारी च भूतानामविहिंसकः ।
काले प्राप्ते चरन् भैक्षं ब्रह्म भूयाय कल्पते ।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
अनपेक्षः शुचिर्दक्षः उदासीनो गतव्यथः ॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ॥
अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ।
न कुर्यान्न वदेत्किञ्चिन्न ध्यायेत्साध्वसाधु वा ।

आत्मारामोऽनया वृत्त्या विचरेज्जड़वन्मुनिः ।
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरतिरात्मवान् समदर्शनः ।
बुधो बालकवत्क्रीडेत् कुशलो जड़वच्चरेत् ।
वदेदुन्मत्तवद् विद्वान् गोचर्यान्नैगमश्चरेत् ।
क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽपि वा ।
ताड़ितः सन्निरुद्धो वा वृत्त्या वा परिहापितः ।
वीष्ठितो मूत्रितो वा ऽज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥
सम्माननं परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिञ्च विन्दति ।
तथा चरेद्वै योगी स सतां धर्ममदूषयन् ।
जना यथावमन्येरन् गच्छेयुर्नैव सङ्गतिम् ।
जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ।
सर्वत्र विचरन्मौनी वायुवद्वीतकल्मषः ।
समदुःखसुखः दान्तो हस्तप्राप्तञ्च भक्षयेत् ।
इयं परमहंसस्य गतिः श्रेष्ठा निगद्यते ।
इति परमहंसदशावर्णनम् ।

## ४९ द्विजेतरेषां प्रव्रज्याविधानम् ।

त्रिलोकस्य पावयित्री संवर्द्धयित्री चेयमविनाशिनी वर्णाश्रममर्यादा नाशवन्तमपि मृत्युलोकमधिवसन्तीमुन्नतिशीलां मानवजातिं संरक्षितुं परमं साधनमित्यत्र नास्ति सन्देहलेशोऽपि । वर्णेषु ब्राह्मण आश्रमेषु संन्यासः श्रेष्ठौ स्तः । अत एव संन्यासाश्रमस्य महत्त्वं सर्वतो गरीय इति शास्त्राणि समामनन्ति । संन्यासी नूनमात्मानं वर्णाश्रमधर्मरक्षकं जानीयात् । तदाचरणेनैवेदं स्फुटीभवेद् यदसौ दैवान्यपि जगन्ति संवर्द्धयितुमुच्चरदायीति । देहाध्यासशून्यायां परमहंसदशायां यद्यास्तां, किन्तु तद्व्यतिरिक्तावस्थान्तरेषु वर्णाश्रमधर्मरक्षार्थं सदा सावधानेन संन्यासिना भवितव्यम् । करालकलिकालप्रभावातिरेकेण कल्मषदूषिते मानवसमाजे चत्वारोऽपि वर्णाः परित्यक्तस्वधर्माण इति तद्बीजरक्षणमपि न सुशकमित्यवधेयम् । प्रबले कलिकाले

ब्राह्मणाः शूद्राश्चावशिष्यन्ते। घोररूपे कलौ तु तद्बीजरक्षाऽपि कथं कथमपि सम्भविष्यति। आश्रमविषयेऽप्येवमेवावधेयम्। कलिकालप्राबल्येन गृहस्थाश्रमः संन्यासाश्रमश्चेति द्वावाश्रमाववशिष्टौ स्यातां, घोरस्वरूपतामापन्ने कलौ तु तद्बीजरक्षणं चापि सुमहत् कठिनं सम्पत्स्यते। अत एवाऽऽपद्धर्ममनुसृत्य तन्त्रशास्त्राणि कलिकालधर्मप्रकरणे पञ्चमस्यापि वर्णस्य द्वयोश्चाश्रमयोः स्थितिं समर्थयन्ति, निःश्रेयससाधनार्थं पञ्चानामपि वर्णानां संन्यासाश्रमाधिकारं चापि निर्दिशन्ति। व्यवस्थेयमापद्धर्ममूलिका। वर्णाश्रमधर्ममर्यादापरिरक्षणाय ब्राह्मणाः ब्राह्मणेतरे च संन्यासिनो नैजानि पृथक् पृथक् चिन्हानि गृह्णन्तः स्वानि कर्माणि च विदधानाः सावधानाः परं पदं लभन्त इति। यद्यपि तन्त्रेषु सुस्पष्टशब्दं दरीदृश्यते, तथापि सर्वेऽपि पाञ्चवर्णिका मनुतनुजनुषो वर्णाश्रममर्यादारक्षायै ब्राह्मणवर्णसाधुभिरेव दीक्ष्येरन् इत्यपि तत्र निस्सन्देहमुक्तम्। ब्राह्मणद्वारा निर्वर्त्तिता किल कर्मकाण्डपद्धतिः सिद्धिकरी श्रेयःसाधिका हिताधायिका च समाम्नायते। तथा हि..............................तन्त्रे—

चत्वारः कथिता वर्णा आश्रमा अपि सुव्रते!।
आचाराश्चापि वर्णानामाश्रमाणां पृथक् पृथक्॥
कृतादौ, कलिकाले तु वर्णाः पञ्च प्रकीर्त्तिताः।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च॥
एतेषां सर्ववर्णानामाश्रमौ द्वौ महेश्वरि।
तपःस्वाध्यायहीनानां नृणामल्पायुषामपि॥
क्लेशप्रयासाशक्तानां कुतो देहपरिश्रमः।
ब्रह्मचर्याश्रमो नास्ति वानप्रस्थोऽपि न प्रिये॥
गार्हस्थ्यो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे।
विप्राणामितरेषाञ्च वर्णानां प्रबले कलौ॥
उभयत्राश्रमे देवि! सर्वेषामधिकारिता।
विप्राणामितरेषां च कर्मलिङ्गं पृथक् पृथक्॥
अवधूताश्रमो देवि! कलौ संन्यास उच्यते।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च॥
कलावधूतसंस्कारे पञ्चानामधिकारिता॥
इत्यादि।

कर्मोपासना ज्ञानं चेति काण्डत्रयविभक्तो भगवानपौरुषेयो वेदः। कलिकालप्रभावविजृम्भणेन वैदिककाण्डत्रयसाधनेऽल्पशक्तयो मनुष्या न समर्था

इति हेतोर्वैदिककर्मकाण्डस्थाने तान्त्रिकस्य कर्मकाण्डस्याविर्भावः समजनि । अत एव सम्प्रति सर्वत्रैव कर्मकलापे तान्त्रिकप्रयोगप्राचुर्य्यं परिलक्ष्यते । अद्वैतं स्वस्वरूपमुपलब्धुमसमर्थानां पुरुषाणां कृत एव कलिकाले वहुविधानां दार्शनिकद्वैतसिद्धान्तानां प्रचारोऽभूद् भविष्यति च भविष्यति । उपासनायामपि सगुणनिर्गुणयोर्भेदराहित्येऽपि स्वतन्त्रस्याधिकारद्वयस्य सत्तां निर्दिशन्ति पुराणशास्त्राणि । तथाहि—

स च स्वेच्छामयो देवः साकारश्च निराकृतिः ।
तेजो रूपं निराकारं ध्यायन्ते योगिनः सदा ॥
वदन्ति च परं ब्रह्म परमानन्दमीश्वरम् ।
अदृश्यं सर्वद्रष्टारं सर्वज्ञं सर्वकारणम् ॥
सर्वदं सर्वरूपं तं वैष्णवास्तन्न मन्वते ।
वदन्ति चैव ते कस्य तेजस्तेजस्विना विना ॥
तेजो मण्डलमध्यस्थं ब्रह्मतेजस्विनं परम् ।
स्वेच्छामयं सर्वरूपं सर्वकारणकारणम् ॥
अतीवसुन्दरं रूपं बिभ्रतं सुमनोहरम् ।
किशोरवयसं शान्तं सर्वकान्तं परात्परम् ॥
× × × ×
ध्यायन्ते वैष्णवाः शश्वद्देवदेवं सनातनम् ।
जन्ममृत्युजराव्याधिशोकभीतिहरं परम् ॥

[ देवी भागवते, स्कं० ६ श्लो० १२-२३ ]

अद्यत्वे अद्वैत-द्वैत-स्वरूप-निर्गुण-सगुणाधिकारकारणत्वेन चतुर्थाश्रमसेविसाधुसंन्यासिष्वपि भेदः प्रतीयते । एकस्माद्द्वयोरुत्पत्तिश्चेत्तर्हि द्वाभ्यामनेकेषामपि सम्भविष्यति । वैष्णवसम्प्रदायदार्शनिकरहस्यैकमात्रप्रकाशके श्रीदेवीभागवते रहस्यमिदं भगवता श्रीवेदव्यासेन सुस्पष्टं साधु प्रकटीकृतम् । रहस्यं तद् द्वैतवादिनां सर्वेषामेव सम्प्रदायानां कृते दुर्लभममृतस्वरूपमवगन्तव्यम् । श्रीभगवद्भक्तकृपया देवीभागवतसम्बन्धिन्या ज्ञानेश्वरीटीकया द्वैतवादिनः साधकाः सविशेषं ज्ञानमनुभविष्यन्तीति सुदृढो विश्वासः ।

अद्वैतद्वैतयोर्निर्गुणसगुणयोश्च भेदकारणादेव मुक्तावपि विभेदः सम्पन्नः । अद्वैतनिर्गुणाधिकारिकृते निर्वाणमुक्तिः, द्वैतसगुणोपासककल्याणाय सामीप्यादिमुक्तिरिति । कलिकालप्रभावेण संन्यासाश्रमसेविष्वपि भेदसद्भावः स्वाभाविक एव । यतः कालो हि दुरतिक्रमः । अतः किल कलिकाले चतुर्थाश्रम-

सेविनां नाना श्रेणयो दृष्टिगोचरतामायान्ति । निर्वाणपदं वा सालोक्यादिमुक्तिर्वा तेषां लक्ष्यं यदस्तु, किन्तु ते सर्वं एवाऽऽध्यात्मिकोन्नतेरधिकारिणः। विषविषय वैराग्यान्वितास्ते लोकमिमं पवित्रयन्ति । वर्णाश्रममर्यादारक्षणपरायणतया ते समेषामपि समादरणीयाः । दैवानि जगन्ति लक्ष्यीकृत्य तेऽग्रेसरन्तीति प्रशंसनीयस्तेषां पन्थाः । परन्तु वैदिकसंन्यासाचाराणां पूर्णपरिपालनासामर्थ्यात् तेषां साधनपद्धतौ, शिक्षायां, दीक्षायां, सदाचारादिषु च भेदसद्भावः सम्भवति । तादृशसर्वसाधारणचतुर्थाश्रमसाधनपद्धतिनिर्देशोऽस्त्यावश्यक इति तत्क्रमः प्रदीयते ।

## ( दीक्षाविधिः )

मुक्तः संसारपाशेभ्यः परमानन्दनिर्वृतः ।
कुलावधूतं ब्रह्मज्ञं गत्वा सम्प्रार्थयेदिदम् ॥
गृहाश्रमे परब्रह्मन् ममैतद्विगतं वयः ।
प्रसादं कुरु मे नाथ! संन्यासग्रहणं प्रति ॥
ततः शिष्यः कृतस्नानो यतात्मा विहिताह्निकः ।
ऋणत्रयविमुक्त्यर्थं देवर्षीनर्चयेत्पितॄन् ॥
देवा ब्रह्मा च विष्णुश्च रुद्रश्च स्वगणैःसह ।
ऋषयः सनकाद्याश्च देवब्रह्मर्षयस्तथा ॥
समर्च्य विधिवत्तेभ्यः पिण्डान् दद्यात् पृथक् पृथक् ।
समाप्य श्राद्धकर्माणि गुरुर्दक्षिणवर्त्मना ॥
मुमुक्षुश्चित्तशुद्ध्यर्थमिष्टमन्त्रं शतं जपेत् ।
उपासनानुसारेण वेद्यां मण्डलपूर्वकम् ॥
संस्थाप्य कलशं तत्र गुरुः पूजां समाचरेत् ।
विधाय पूजां ब्रह्मज्ञो वह्निस्थापनमाचरेत् ॥
प्रागुक्तसंस्कृते वह्नौ स्वकल्पोक्ताहुतीर्गुरुः ।
दत्त्वा शिष्यं समाहूयाहुतीस्तेनापि हावयेत् ॥
आदौ व्याहृतिभिर्हुत्वा प्राणहोमं प्रकल्पयेत् ।
तत्त्वहोमं ततः कुर्याद्देहात्माध्यासमुक्तये ॥
चतुर्विंशतितत्त्वानि कर्माणि दैहिकानि च ।
हुत्वाऽग्नौ निष्क्रियो देहं मृतवच्चिन्तयेत्ततः ॥

इत्यादि

वैदिकसंन्यासव्यतिरिक्तकलियुगोपयोगिसर्वसाधारणसंन्यासदीक्षाविषये-निम्न-निर्दिष्ट सिद्धान्तानुसरण-पुरस्सर मधोलिखितरीत्या दीक्षाऽनुष्ठेया—

(क) पद्धतिग्रन्थस्यैतस्य पूर्वभागे समुल्लिखित-वैराग्याधिकारवान् पुरुषो निष्कपटं पूर्वोक्तां रीतिमनुसृत्य स्वजनानुज्ञातः श्रीगुरुदेवचरणं शरणमुपेयात् ।

(ख) गुरुगीतानिर्दिष्टशुभलक्षणसंयुक्तो गुरुर्मुमुक्षुणा शिष्येणान्वेषणीयः वर्णाश्रमशृङ्खलासंरक्षणार्थं ब्राह्मणवर्णोद्भवः, स्वस्माद्वा उच्चवर्णोत्पन्नः, समान-वर्णप्रादुर्भूतो वा गुरुर्वरणीयः । स च वयोवृद्धः स्यान्न वा, परन्तु ज्ञानवृद्धो नूनं भवेत् ।

(ग) ग्रन्थेऽस्मिन् पूर्वभागे यथास्थानं शिष्यपरीक्षालक्षणं निर्दिष्टम् । तदनुसारेण शिष्यो गुरुणा परीक्षणीयः । देवभाषया वा स्वीयमातृभाषया वा पूर्वकथितरूपं गुरुचरणस्पर्शपूर्वकं शिष्यो गुरुं प्रार्थयेत् । प्रणिपातपादसेवन-जिज्ञासादिना गुरोः प्रसादः समुपलभ्यते । स एव दीक्षामूलं सफलता-निदानं च ।

(घ) संन्यासव्रतग्रहणोपयोगिता सम्पादनाय संन्यासव्रतयोग्यता-धानाय वा समुचितं प्रायश्चित्तमनुष्ठातव्यम् । प्रायश्चित्त-विधानेऽपि वर्णाश्रममर्यादा नोल्लङ्घनीया । गायत्रीपुरश्चरणादिकं द्विजातिहिता धायकम्, राममन्त्रस्य, कृष्णमन्त्रस्य तारकब्रह्ममन्त्रस्य च जपः, गङ्गास्नानं, तीर्थदर्शनमित्यादि प्रायश्चित्तं द्विजेतरहितकरम् । अत्र कृपामयगुरुदेवदयव सर्वतोऽतिरिच्यते ।

(ङ) शुभे देशे काले च ऋणत्रयविमुक्तये मुमुक्षुणा श्राद्धमनुष्ठेयम् । तद्-विधिस्तु प्रथममेव प्रदर्शितः । श्राद्धेऽपि वर्णाश्रममर्यादा नूनं परिपालनीया ।

(च) ततश्च गुरुदेवनिर्देशवशवर्तिना शिष्येण स्वसम्प्रदायमनुसृत्य स्वकीयस्वेष्ट-मन्त्रस्यैकलक्षजपात्मकं पुरश्चरणं समनुष्ठेयम् ।

(छ) तदनन्तरं शुभमुहूर्त्ते पूर्वोल्लिखितरीत्या महासंकल्पो विधेयः ।

(ज) वर्णाश्रममर्यादानुकूलं कलशस्थापनं, गणपतिपूजनं मातृकापूजनं च विधिवदनुष्ठाय ब्राह्मणमन्यं द्वारीकृत्य वा स्वयं वा अग्निं स्थापयेत् । ब्राह्मण वर्णोद्भवेन शिष्येण ब्राह्मणशरीरधारिणा गुरुणा वा अग्निः स्थापनीयः । अन्यथा-ऽत्र योग्यो भूदेवो नूनं द्वारीकर्त्तव्यः ।

(ञ) यस्य सविस्तरवर्णनमुपरि विहितमास्ते, तत् होमकार्यमपि वर्णाश्रममर्यादापालनपूर्वकमेव विधेयम् । द्विजेतरवर्णभाजा शिष्येण पौराणिकेन तान्त्रिकेण वा मन्त्रेण स्वसाम्प्रदायिकेन इष्टमन्त्रेण वाऽऽहुतिर्देया ।

(ञ) ततश्च निम्नलिखितं संन्यासमन्त्रं गुरुरुपदिशेत् शिष्यस्तु पौनःपुन्येन तमुच्चारयेत्—

भूर्भुवस्स्वर्गलोकांश्च तेषामैश्वर्यमप्यहम् ।
परित्यजामि मुक्त्यर्थं सम्बन्धो नास्ति मे ततः ॥

(ट) ततोऽनु गुरोराज्ञया स्वसम्प्रदायानुरूपं संन्यासचिन्हं मुमुक्षुणा परिधेयम् ।

(ठ) तदनन्तरं श्रीगुरुदेवो निजकरकमलेन शिष्यहृदयं स्पृशन् आत्मतेजः शिष्ये सञ्चारयेत् । स्वसम्प्रदायानुरूपं शिष्यनामकरणं च कुर्यात् ।

(ड) यत्र सम्प्रदाये यादृशस्येष्टमन्त्रस्य जपः, यादृशस्येष्टरूपस्य ध्यानम्, यादृशसाधनपद्धतेः प्रचारश्च भवेत्, तादृशमेव सर्वं कृपालुर्गुरुदेवः शिष्यं तदाध्यात्मिकसमुन्नतये समुपदिशेत् । उपदेशोऽयं भगवद्भक्तिमार्गावलम्बी मन्त्रहठलयादियोगयुक्तः स्थूलज्योतिर्विन्दुध्यानसंवलितः स्वस्वसाम्प्रदायिकगीताग्रन्थ-निबन्धग्रन्थानुसारी च भवितुमर्हेत् ।

इति द्विजेतरेषां प्रव्रज्याविधानम् ।

---

## ५०--संन्यासिनामन्त्येष्टिः ।

प्रैषोच्चारणेन मुमुक्षुर्नारायणरूपो भवति, तेन प्रैषमन्त्रस्य चरितार्थता प्राप्तिः कृता चेदस्मिन्मृत्युलोके तस्य महत्त्वं निःसीमं जातम् । यतेः प्राणशून्यो देहोऽपि पवित्रो भवति । यतेर्मृतदेहवहने पदे पदे यज्ञानुष्ठानफलं वाहको लभते । कुटीचकव्रतधारिणो यतेर्मृतदेहोऽनले दाहयोग्यः । बहूदकव्रतधारिणो यतेर्मृतदेहोऽनले दाहयोग्यो नदीजले प्रवाहयोग्यो वा हंसव्रतधारिणो यतेर्मृतदेहो नदीजले प्रवाहयोग्यो भूगर्त्ते प्रवेशितुं योग्यो वा । परमहंसदशाप्राप्तस्य यतेर्मृतदेहस्य कृते न कोऽपि विधिः न कोऽपि वा निषेधः । विस्तृतोऽन्त्येष्टिविधिरधो लिख्यते स सर्वविधानां सन्न्यासिनां कृते व्यवहर्त्तव्यः । दाहपक्षे भूगर्त्त प्रवेशपक्षे चापि त एव मन्त्रा ये नदीजलप्रवाहपक्षे लिखिताः सन्ति ।

## ( ब्रह्मीभूतयतिदेहसंस्कारप्रयोगः )

देहपातानन्तरं गृहस्थपुत्रः गृहस्थशिष्यो वा ( यतिशिष्यस्यानधिकारित्वात् ) स्नात्वा आचम्य हस्ते कुशादिकं गृहीत्वा देशकालौ संकीर्त्य मम करिष्यमाणयतिसंस्कारेऽधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तं गोत्रय-निष्क्रयद्रव्यदानद्वाराहमाचरिष्यामि । गृहस्थपुत्रः कर्म्मकर्त्ता चेत् तत्पूर्वाङ्गत्वेन वपनं कारयिष्य इति सङ्कल्प्य कक्षोपस्थशिखावर्जं वपनं कारयित्वा स्नात्वाऽऽचम्य पुनः कुशादिकं गृहीत्वा इदं गोत्रयनिष्क्रयद्रव्यं रजतं चन्द्रदवतं सद्यो यथाकालं वा ब्राह्मणाय ब्राह्मणेभ्यो वा दास्ये । पुनः कुशादिकं गृहीत्वा देशकालौ संकीर्त्य ब्रह्मत्वं गतस्य नारायणस्वरूपिणः अमुकस्य भिक्षोः बृहच्छौनकोक्तविधिना ( कर्म्मकर्त्तुः यो वेदस्त तद्वेदविधिना सर्वोऽपि यति-देहसंस्कारः करणीयः । बृहच्छौनकोक्तविधिस्तु यजुर्वेदीयः ) संस्कारं करिष्य इति संकल्प्य अव्रणं नवं कलशमादाय तीर्थोदकादिनाऽऽपूर्य्य तदुदकम्—

गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥
नारायणपरं ब्रह्म तत्त्वं नारायणः परः ।
नारायणपरो ध्याता ध्यानं नारायणः परः ॥
यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥
देवदत्ततया कश्चिद् ब्रह्मैव विकृतिं गतः ।
पूर्णं ब्रह्मैव संप्राप्तस्तस्य ब्रह्म तदुच्यते ॥

इत्येतैर्मन्त्रैश्चाभिमन्त्र्य प्राणायामपुरःसरं "नमस्ते" इत्यादिभिः षोडश-मंत्रैः "सहस्रशीर्षा" इति पुरुषसूक्तेन "आपोहिष्ठा" इति तिसृभिश्च तदुदकेन यतिं स्नापयित्वा तच्छरीरम् "ॐ नमो नाराणाय" इति मन्त्रेण वस्त्रचन्दनाद्युपचारैरभ्यर्च्य शिक्यादौ शरीरमारोप्य मन्त्रघोषैर्जयशब्दादिभिः शंखघण्टाशब्दादिभिश्च ग्रामात्प्राचीमुदीचीं वा दिशं नीत्वा अश्वत्थमूलं नदीतीरादिरूपं वा समाश्रयेत् ।

तत्र भूमिखननपक्षे भूमिं व्याहृतिभिः संप्रोक्ष्य चतुर्हस्तप्रमाणं चतुरस्रमधोगतं देवयजननामकं खनित्वा तन्मध्ये सार्द्धहस्तपरिमितं लघुगर्तं कृत्वा "ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम्" इति व्याहृतिभिर्गर्तं पञ्चगव्येन प्रोक्ष्य ।

जलप्रवाहणपक्षे गर्तस्थाने महानदीं परिकल्प्य तत्र पूर्ववत् पञ्चगव्यं प्रक्षिप्य, प्रदक्षिणाग्रान् कुशानास्तीर्य गायत्र्याः शरीरं प्रोक्ष्य पुरुषसूक्तेन शंखोदकेन संस्नाप्य प्रणवेनाष्टोत्तरशतवारं संस्नाप्य ॐ नमो भगवते वासुदेवायेति मन्त्रेण षोड़शोपचारैरभ्यर्च्य तुलस्यादिमिलितपुष्पमालाभिरभ्यर्च्य "विष्णो हव्यं रक्ष" इति शरीरं गर्ते नद्यां वा निधाय—

"ॐ इदं विष्णुर्विचक्रमे त्रेधानिदधे पदम्। समूढ़मस्य पाँसुरे स्वाहा" इति दण्डं त्रेधा कृत्वा दक्षिणहस्ते निधाय ॐ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति । वेदान्त- विज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे० ॥ इति हृदये जपेत् । स्वशरीरं हस्तेनाभिमृशेत् ।

ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।
सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥
इतिमूर्ध्नि जपेत् ।

ॐ विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा इति नाभौ जपेत् ।

ॐ देवस्य त्वा सवितु० इति कर्णयोर्जपेत् । मूर्धानं "भूर्भुवः स्वः" इत्युक्त्वा शंखेन नारिकेलेन वा भेदयेत् ।

ॐ भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ॥ इति मन्त्रेण परश्वादिना भेदयेत् ।

शिरोभेदनं कर्तुमशक्तश्चेत् शिरसि गुडपिण्डं नारिकेलादिफलं वा निधाय भिन्द्यादित्याचारः ।

प्रणवेन देवयजनं दर्भैराच्छाद्य सिकतादिना पूरयेत् ।

नद्यादौ त्वेच्छिरोभेदनानन्तरं पूर्वोक्तसमव्याहृतिभिरभिमन्त्र्य दर्भैराच्छाद्य "भूर्भुवः स्वरोम्" इत्यभिमन्त्र्य पाषाणैर्दृढं बद्ध्वाऽगाधजले भिक्षुदेहम् "ॐ स्वाहा" इति विमुञ्चेत् ।

## ( ब्रह्मीभूतयतेः दशदिनकृत्यम् )

ततो "जन्मारभ्य-सम्भावित-पापैर्मुक्तावयमश्वमेधसहस्रफलं प्राप्ता" इति भावयन्तो नमस्कृत्यागमनोत्सवादधिकोत्सवं कुर्वन्तो यत्रापस्तत्र गच्छेयुः ।

उच्चैर्हरिस्मरणपूर्वकमवभृथवुद्धया सर्वे स्नात्वा वस्त्रादि धारयेयुः । कर्म-कर्त्ता स्नात्वाऽऽचम्य हस्ते जलादिकं गृहीत्वा सिद्धिंगतस्य ब्रह्मीभूतस्य नारायण स्वरूपिणः अमुकभिक्षोस्तृप्त्यर्थं तर्पणं करिष्य इति संकल्प्य सव्येन देवतीर्थे-नैव "आत्मानं तर्पयामि, अन्तरात्मानं तर्पयामि, परमात्मानं तर्पयामि" इति चतुर्वारं तर्पणं कुर्यात्—

ततः शुक्लपक्षे सिद्धिंगतश्चेत् केशवं तर्पयामि नारायणं तर्पयामि माधवं० गोविन्दं० विष्णुं० मधुसूदनं० त्रिविक्रमं० वामनं० श्रीधरं० हृषीकेशं० पद्मनाभं० दामोदरं० इति ।

कृष्णपक्षे सिद्धिंगतश्चेत् सङ्कर्षणं० वासुदेवं० प्रद्युम्नं० अनिरुद्धं० पुरुषोत्तमं० अधोक्षजं० नारसिंहं० अच्युतं० जनार्दनं० उपेन्द्रं० हरिं० श्रीकृष्णं० इति द्वादशनामभिस्तर्पयेत् । इदं तर्पणं क्षीरेणेति केचित् । ततस्तीरं प्राप्य धौतवस्त्रं परिधायाऽऽचम्य सिद्धिंगतस्य ब्रह्मीभूतस्य नारायणस्वरूपिणः अमुकभिक्षोस्तृप्त्यर्थं नारायणपूजनं करिष्य इति संकल्प्य देवयजनोपरि (यत्रयतिदेहस्थिति स्तस्योपरि) जलप्रवाहणपक्षे-नदीतीरे चतुरस्रवेदिकां सम्पाद्य तत्र मृण्मयं लिङ्गं संस्थाप्य नदीजल एव वा तत्स्वरूपं विचिन्त्य पुरुषसूक्तेन "ॐ नमो नारायणाय" इत्यष्टाक्षरेण वा आवाहनाद्युपचारैः पूजयेत् । ततः पायसबलिं दत्वा घृतदीपं च समर्प्य पायसबलिं नद्यादौ क्षिपेत् । ततः शंखेन शुद्धजलमादाय तत्र गंधपुष्पतुलसीदलानि प्रक्षिप्य "ॐ ब्रह्मणे नमः इदमर्घ्यं समर्पयामि" इत्येवमष्टार्घ्याणि दद्यात् । एवं प्रकारेण सम्पूज्य सर्वे वाद्यादिघोषेणा-त्युत्सवेन गृहं गच्छेयुः । इति प्रथमदिनकृत्यम् ।

यतेः सूतकं न भवति । कर्मकर्त्ता सम्यक्व्रताचरणं कुर्यात् । कर्मकर्त्ता एवमेव द्वितीयादिदशमदिनपर्यन्तं प्रत्यहं "आत्मानं तर्पयामि, अन्तरात्मानं तर्पयामि, परमात्मानं तर्पयामि" इति चतुर्वारं तर्पणं कुर्यात् । केशवादिद्वादशना-मभिः सङ्कर्षणादिद्वादशनामभिर्वा तर्पणं पूर्वोक्तनारायणपूजनं पायसबलिदानं घृतदीपदानमर्घ्यदानं च कुर्यात् ।

द्वितीयादिदशमदिनपर्यन्तं देवयजनोपरि नदीतीरे वा नदीजले वा पूर्वोक्तकृत्यं करणीयम् । अशक्तौ सत्यां ब्रह्मीभूतयतेर्मठेऽपि एतत्कृत्यं भवितुमर्हति । मठाभावे कर्मकर्त्तुर्गृहेऽपि भवितुमर्हति ।

## ( यतेरेकादशाहे पार्वणम् )

एकादशाहे (१) पुत्रः प्रातर्नित्यक्रियो मध्याह्ने नद्यादौ स्नात्वा तिलतर्पणं कुर्यात्। ततो गृहं मठं वाऽऽगत्य गोमयादिनोपलिप्ते शुचिस्थले उपविश्य श्राद्ध-सामग्रींसम्पाद्य गणेशं शालिग्रामं च संस्थाप्य दक्षिणाभिमुखं दीपं प्रज्वलय्या-ऽऽचम्य दीपं सम्पूज्य हस्तयोः पुष्पाणि संगृह्य—

ॐ यं ब्रह्म वेदान्तविदो वदन्ति परे प्रधानं पुरुषं तथाऽन्ये।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥

इति गणेशोपरि पुष्पाञ्जलिं समर्प्य—

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्याये सर्वविघ्नोपशान्तये॥
इति विष्णुं ध्यात्वा पुष्पाञ्जलिं समर्पयेत्।

ततो वैश्वदेविकब्राह्मणं ब्रह्मीभूतपित्रादि (गुरु) ब्राह्मणं च कुशमयं सम्पाद्य तैलाभ्यङ्गपूर्वकं संस्नाप्य "ॐ एतं ते" इति पठित्वा ॐ भूर्भुवः स्वः विश्वदेवसम्बन्धि कुशब्रह्मन् सुप्रतिष्ठितो वरदो भव। ब्रह्मीभूतपित्रादि (आत्मादि) सम्बन्धिकुशब्रह्मन् सुप्र० इति प्रतिष्ठापयेत्। ततः—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा।
त्वय्यर्चिते सोऽर्चितोऽस्तु यस्याहं नाम कीर्तये॥ इति पठेत्।

ततो यवान् गृहीत्वा अद्येह अमुकगोत्रब्रह्मीभूतपित्रादित्रयश्राद्ध-सम्बन्धिनां पुरूरवार्द्रवसंज्ञकानाम् ( आत्मादित्रय श्राद्धसम्बन्धिनां साधु रुरुसंज्ञकानां )—(२) विश्वेषां देवानामेकादशाहकर्तव्ये पार्वण श्राद्धे भवान्मया निमन्त्रित इति निमन्त्रयेत्। निमन्त्रितोऽस्मि इति प्रत्युक्तिः—

---

(१) पुत्रादन्यः शिष्यादिः कर्ता चेत् नद्यादौ स्नात्वा यज्ञोपवीत्येव आत्मानं तर्पयामि, अन्तरात्मानं तर्पयामि परमात्मानं तर्पयामि इति देवतीर्थेन एकैकमञ्जलिं दद्यात्।

(२) सम्बन्धनामगोत्रैश्च पार्वणं द्वादशेऽहनि।
तत् क्रमात् ज्ञातयः कुर्युः एकादशदिनेऽपि वा॥
अथवात्मान्तरात्मेति परमात्मेत्युदाहृतः।
तत्र श्राद्धे साधुरुरवो विश्वेदेवाः प्रकीर्तिताः॥

